"गौर्गौर्गौः आलभ्यता"मिति ब्रूयात् । ततो वरः "माता रु-द्राणां दुहिता वसूनाᳪस्वसाऽऽदित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । मम चामुक-शर्मणो यजमानस्य च पाप्मानᳪहनोमीति" गवालम्भपक्षे प्रति ब्रूयात् । उत्सर्गपक्षे तु "माता रुद्राणा (मित्यादि) पाप्मा हत ॐउ-त्सृजत तृणान्यत्तु" ॐकारमुपांशु उक्त्वा "उत्सृजत"त्युच्चैः प्रति-ब्रूयात् । ततः कन्यापिता वराय वस्त्रचतुष्टयं प्रयच्छति । वरश्च तेषु मध्ये वस्त्रद्वयं स्वयं परिधत्ते । "परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसं-व्ययिष्ये" इति मन्त्रेण । "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" इत्यनेन यज्ञोपवीतम् । "यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च मा विदद्यशो मा प्रति पद्यता"मिति मन्त्रेण उत्तरीयवस्त्रम् । ततो द्विराचमनम् । कन्यापित्रा दत्तं चन्दनं मालेऽनुलिप्य "सुचक्षा अहमक्षीभ्याम्भूयासᳪसुवर्चा मुखेन । सुश्रुत्कर्णाभ्याम्भूयासम्" इति जपेत् । "या आहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन च"इति मन्त्रेण पुष्पग्रहणम् । "य-द्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयी"ति मन्त्रेण पुष्पमालाबन्धनम् । "अलङ्क-रणमसि भूयोऽलङ्करणं भूयादि"ति मन्त्रेण कर्णयोरलङ्करणधारणम् ।

इति मधुपर्कः ।

अथ कन्याऽपि स्नातोपहिताहतवस्त्रा गृहान्तः सूत्रवेष्टितोपलसहि-तदृषदुपरि हरिद्रानिर्मितगौरीहरौ सौभाग्यादिकामनया पूजयित्वा इन्द्राणीं च तत्रैवाक्षतपुञ्जेषु पूजयित्वा प्रार्थयेत् ।

देवेन्द्राणि ! नमस्तुभ्यं देवेन्द्रप्रियभामिनि ! ।
विवाहे भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥ इति ।

ततो गौरीं सौभाग्यादि प्रार्थयमाना तत्रैव तिष्ठेत् । ततो वरः प्राणा-

नायम्य देशकालौ स्मृत्वा "धर्मप्रजासम्पत्त्यर्थं दाराप्रतिग्रहणमहं करिष्ये। तदङ्गतया विहितं अग्निप्रतिष्ठापनमहं करिष्ये"। ततो मण्डपमध्ये वेद्युपरि ईशान्यां दिशि पञ्चभूसंस्कारान् कृत्वा लौकिकं निर्मन्थ्य वाऽग्निं स्थापयित्वा, वरः वैकल्पिकावधारणं कुर्यात्। "लौकिकाग्निस्थापनम्। गौरीपरिणयनम्। कुमार्या वासःपरिधानादि गृहमध्ये। अग्नेर्दक्षिणतः कुम्भधृक्। तेजन्या दक्षिणपादेन परिवर्तनम्। पूर्वेण ब्रह्मणो गमनम्। उत्तरेण पात्रासादनम्। द्वे पवित्रे। ताम्रमयी आज्यस्थाली। पालाश्यः समिधः। प्राञ्चाज्ञाधारौ। समिद्धतमे आज्यभागौ। पूर्णपात्रम्। राष्ट्रभृद्धोमः। जयाहोमः। अभ्यातानहोमः। सुगन्नु पन्थामित्याहुत्यन्ते परमृत्यो इत्याहुतिः। वध्वा आनडुहचर्मोपवेशनं प्राच्याम्। त्रिरात्रं ब्रह्मचर्यमुभयोः। एतान्वैकल्पिकान्पदार्थानहं करिष्ये"। ततः अग्नेः पश्चात्तृणपूलकं स्थापयेत्। अथ कन्यादानादि। ब्राह्मणाः स्वलङ्कृते वेश्मनि मङ्गलगीततूर्यनिर्घोषे क्रियमाणे पूर्वापरभागयोर्हस्तान्तरालं विहाय प्रत्येकं प्रस्थमिततण्डुलैर्द्वौ राशी कृत्वा मध्ये कुङ्कुमादिकृतस्वस्तिकाङ्कितमन्तःपटं राश्योर्मध्ये उत्तरदशं धारयेयुः। "स्वस्ति न इन्द्राग्नी"तिसूक्तं पठेयुः। पुरन्ध्र्यो मङ्गलगीतिं कुर्युः। वधूवरौ च मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठेताम्। अथ ज्योतिषिकेन मङ्गलपद्यपाठपूर्वकं "सुमुहूर्तोऽस्तु तदेव लग्न"मिति पठिते प्रदिष्टकाले सद्योऽन्तःपटमुदगपसार्य, कन्यावराभ्यां परस्परस्मिन् अञ्जलिस्थतण्डुलगुडजीरकविकिरणं करणीयम्। "मनो जूति"रिति मन्त्रेण मङ्गलाक्षता वधूवराभ्यां परस्परं क्षिप्येताम्। वधूवरपादोपरि स्थाप्य, वरो वध्वाः शिरोपरि। ततो वरं प्राङ्मुखं वधूं प्रत्यङ्मुखीं कारयित्वा, ततः पूर्वं कन्यापित्रा दत्तं वस्त्रं कुमारीं परिधापयति "जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा। शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः" इत्यनेन मन्त्रेण। अथोत्तरीयम् "या अकृन्तन्नवयं या अतन्वत। याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवीर्जरसे संव्ययस्वा-